क्षपिताः क्षत्रियाः सर्वे शत्रूणां वर्धितं यशः ॥ २६

मध्यस्थो हि त्वमप्यासीर्न क्षमं किंचिदुक्तवान् ।
धूर्धरेण त्वया भारस्तुलया न समं धृतः ॥ २७

आदावेव मनुष्येण वर्तितव्यं यथा क्षमम् ।
यथा नातीतमर्थं वै पश्चात्तापेन युज्यते ॥ २८

पुत्रगृद्ध्या त्वया राजन्प्रियं तस्य चिकीर्षता ।
पश्चात्तापमिदं प्राप्तं न त्वं शोचितुमर्हसि ॥ २९

मधु यः केवलं दृष्ट्वा प्रपातं नानुपश्यति ।
स भ्रष्टो मधुलोभेन शोचत्येव यथा भवान् ॥ ३०

अर्थान्न शोचन्प्राप्नोति न शोचन्विन्दते सुखम् ।
न शोचञ्श्रियमाप्नोति न शोचन्विन्दते परम् ॥ ३१

स्वयमुत्पादयित्वाग्निं वस्त्रेण परिवेष्टयेत् । C. 11 40 B 11 1. 39 K 11 1 37

half = 26b Ś1 Ko बुद्धिर् (for युद्धम्) —(L. 2) Ś1 Ko दुर्दर्शनो, K2 दुर्दर्षणो (for दुर्म°) K3 5 सर्वदा (for वीर्यवान्) —(L 3) Ś1 सत्त्ववाश्चैव, Ñ1 सत्यवाग्वापि Ś1 K3 सर्वदा, Ko सर्वग, K1 D9 नित्यश° (for नित्यदा) —Ko om line 4 —(L 4) K1 2 D2 लोके, D9 सत्वा (for सन्तो) Ś1 K1 2 D2 भवद्विधा° (for भवादृशा ) ]

26 Ś2 missing (cf. v l 15) —a) Ś1 Ko धर्मे (for चर्मे°) B3 म कृत°, D2 सुकृत, M सस्मृत° (for सत्कृत°) T अधर्मसंयुत किंचित्, G3 4 अधर्म (G3 °र्मे ) संस्कृ(G3 °स्मृ )त° कश्चित् —b) Ś1 Ko–2 B1 3 4 D3 6 7 (marg, orig as in text) पुत्रेण तव मारिष (Ś1 Ko D3 भारत, K1 2 भारत°) (after मारिष, नित्य युद्ध° etc., as in text, is cancelled in B1), K3 5 Ñ1 D5 तव पुत्रेण मारिष —c) B1 2 4 क्षयिता°, B3 Dn D3 7 G1 कुपिता, G2 क्षुभिता° (for क्षपिता°) Ś1 K (K4 missing) D2 5 क्षत्रिया° क्षपिता° (by transp ) —d) T1 वर्धितो, M1 वर्धते (for वर्धितं)

27 Ś2 missing (cf. v l. 15) —a) Ś1 Ko मध्यस्थाने (for °स्थो हि) K1–3 5 Ñ1 न, M3 4 [ऽ]पि (for हि) Ko 5 G3 M3 4 त्वमप्यासीन्, K1 2 Dn1 च म(Dn1 तम)प्यासीर् (K2 °सी), M1 त्वमप्यायन् D3 मध्यस्थो नन्वमभ्यासीर् —b) G3 काम; Cd क्षमं (as in text) Dn1 किं विविक्तवान्, D3 damaged, D9 कश्चिदुक्त —c) Ś1 Ko मध्यस्थेन, K1 दुरुर्पत, K2 3 5 दुर्द्ध(K3 °र्ध )र्षेण, Ñ1 B Dn D1 3–7 9 T1 G1 2 दुर्धरेण, D2 दुद्दर्षण, T2 दूर्ध्वरेण, G3 भासुरेण, M1 दूर्धरेण (for धूर्ध°) —d) K3 तुल्या D2 S समो Ñ1 वृत (for धृत°)

28 Ś2 missing (cf v l 15) —ab) G2 3 मनुष्येषु M3 [आ]वर्ति° K1–3. 5 तथा क्षम, Dn1 T G यथाकर्म, M3 यथा क्षय —c) K3 5 नातित(K5 तीव )धर्मं, Ñ1 नातीतवृत्त, D2 तानीवमर्थं (sic) —d) D7 (before corr ) युज्यते. Dn1 पश्चात्तापेन युज्यते

29 Ś2 missing (cf v l. 15) —a) Ś1 K (K4 missing) B4 D2 5 G3 पुत्रस्नेहात्, B1 2 D8 (by corr ) °बुद्ध्या; G1 °गृध्न्वा; G2 °वध्या (for °गृद्ध्या) G3 राज (for राजन्) —b) K1 विषापता; K2 चिकिर्षता; Ñ1 D1 4 6 7 9 T G M1 2 चिकीर्षित; B Dn1 D2 चिकीर्षिता, Dn2 D8 °र्षया, D5 विकीर्षता —c) K3 5 Ñ1 B Dn D1 3–7 9 T2 इम (for इद ) Ñ1 D2 प्राप्तो —d) B4 अर्हति Dn1 न तमावितुमर्हसि

30 Ś2 missing (cf v l 15) —a) Ś1 मधु यत्; Ko मधुवत्, K3 5 Dn1 D4 मधुप°, Cd मधु य° (as in text) —b) K1 प्रताप, D4 प्रापातं, M2 प्रापतन्, Cd प्रपात (as in text) Ko ननु, K3 नाव; K5 नात्र (for नानु°) —After 30ab, D9 reads (for the first time) 32, repeating it in its proper place —c) K1 भ्रष्ट-, K2 दृष्टो; G3 हृष्टो (by corr as in text), M4 द्रष्टा Dn2 T2 G2 M3 -लोपेन (for -लोभेन) —d) K1 2 B Dn2 D1 3–7 9 M3 4 शोचत्येव, M1 न वेत्येव

31 Ś2 missing (cf v l 15) —a) K2 अर्था न, K3 अथा च, K5 अथाच-, D6 अर्था ह, T2 G2 अर्थं न (for अर्थान्न) D5 नाप्नोति, G1 प्राप्नोषि (for °ति) —Ñ1 D2 om. (hapl ) 31bc —b) B Dn D1 3 4 6 7 9 फल, M1 सुत (for सुखम्) K5 न शोचिन्विंद्देरसुख (sic) —c) K2 प्रियम्, G3 श्रुतम् (for श्रियम्) —d) K5 नृ (for न) Ś1 K (K4 missing) D2 5 लभते (for विन्दते) K2 M1 (before corr ) सुख, K3 5 धन, T G1 जय, Cd परम् (as in text)

32 Ś2 missing (cf. v l 15) —a) T1 G3 M1 उत्पात (for उत्पाद°) Ś1 K (K4 missing) D2 5 स्वयमुत्पाद्य यो वह्निं (K1 D5 योग्निं तु, K3 यो वह्निर्, D3 योग्निं वै ) —b) Ñ1 B1–3 D1–7 °वेष्टयन् B4 S

10 39 37 दह्यमानो मनस्तापं भजते न स पण्डितः ॥ ३२
त्वयैव ससुतेनायं वाक्यवायुसमीरितः ।
लोभाज्येन च संसिक्तो ज्वलितः पार्थपावकः ॥ ३३
तस्मिन्समिद्धे पतिताः शलभा इव ते सुताः ।
तान्केशवार्चिर्निर्दग्धान्न त्वं शोचितुमर्हसि ॥ ३४
यच्चाश्रुपातकलिलं वदनं वहसे नृप ।
अशास्त्रदृष्टमेतद्धि न प्रशंसन्ति पण्डिताः ॥ ३५
विस्फुलिङ्गा इव ह्येतान्दहन्ति किल मानवान् ।
जहीहि मन्युं बुद्ध्या वै धारयात्मानमात्मना ॥ ३६
एवमाश्वासितस्तेन संजयेन महात्मना ।
विदुरो भूय एवाह बुद्धिपूर्वं परंतप ॥ ३७

इति श्रीमहाभारते स्त्रीपर्वणि प्रथमोऽध्यायः ॥ १ ॥

---

परि( B4 M8 4 °री )तस्तेन योमिना —c) Ś1 K0 D1 दह्यमाने ( D1 °न ) S पुनस्ताप ( M2 °पन् ) —d) Ś1 K0 2 5 भजेच्च ( for भजते ) M4 च ( for स )

33 Ś2 missing ( cf v l 15 ) —a) D8 तथैव G2 ससुतेनेह Ś1 K0-3 5 तथा तव सुतश्चा( Ś1 K0 1 °स्या )य, Dn1 त्वयैव स्वसुतो राजन्; D2 5 यथा तव सुतस्या( D5 °तैश्चा )य —b) K3 5 D4 T2 G2 वाक्यं, M2 वक्य ( for वाक्य ) G2 साधु ( for वायु ) K2 °समिरित°, K8 समीरीत ; T2 °समीरितं —c) Ś1 K0 लोभाज्येनाभि, K1 2 D2 °येनाति, K3 °ज्येनापि, D5 °ज्येनाति Dn1 संसक्तो, S ( except G1 M1 ) सयुक्तो ( for ससिक्तो ) K5 लोष्टेनापि हि सं° —d) D6 ज्वालित°

34 Ś2 missing ( cf v l 15 ) —a) Ś1 K0 अस्मिन् ( for त° ) K3 5 समृद्धे Ś1 has a lacuna for the portion of the text from मिद्धे up to सुता (in 34b) K0 reads from मिद्धे up to the end of 34b, sec m —b) B1 सलभा —After 34ab, K5 wrongly repeats 34cd, 35 and 34ab, and cancels them —c) Ś1 K0 3 B1 2 4 Dn2 D3 5 T G M1 तान्केशवाग्निनिर्दग्धान्, K1, 2 D2 °वार्चिषा दग्धान्; Ñ1 तान्शराग्निविनिर्द°; B3 Dn1 D1 4 6 7 9 तान्वै शराग्निनिर्दग्धान्

35 Ś2 missing ( cf v l 15 ) —a) G2 3 यद्वा ( for यच्च ) Ś1 K0 पातसहित; K1 2 5 D2 °पातमलिनं, K3 °पातसलिल; B Dn2 D1 3 4 6 7 9 पातास्कलिल, Dn1 पाताकलित; D5 तपाकलिल, G3 °पातं क° Cd cites कलिलं —b) K2 ( marg sec m ) वहन ( for वदनं ) Ś1 K0-3 D2 5 वहसि, G2 वपूषे, G3 वहते Ś1 K ( K4 missing ) D2 5 प्रभो; M3 [s]नघ ( for नृप ) —c) K1 D2 अशास्त्र( D2 °स्त्र )दृष्टम्, G1 न शास्त्रदृष्टम्, G3 अशास्त्रमिदम् K3 5 एतद्वै ( K5 °द्धि )

36 Ś2 missing ( cf v l 15 ) —a) Dn1 विस्फुलिंगान्, D3 °लिंग, S ( except G1 2 ) विष्फुलिंगा Ś1 K0-2 इ( K2 र )व ह्येते; K5 इव ह्येता; Ñ1 इवा ज्येन; B1 2 इव ह्यग्नेर्, B4 S इवाग्नेस्तु ( B4 °स्तान् ) K3 सविस्फुलिंगा इव देतान् ( sic ) —b) K1 2 वहति; K3, 5 दहते ( K5 °तो ) After दहन्ति, D5 ins यथा श्रुत K3 किल B1 2 बांधवान्, B3 वा परान् ( for मानवान् ) —c) K3 5 जहीत्व B4 D7 ( before corr ) जयस्व, D8 जहाहि Ś1 K0 बुद्ध्या मन्यु ( by transp ) S जहि मन्यु स्व( G2 सु )बुद्ध्या वै

37 Ś2 missing ( cf v l 15 ) Before 37, N ( except S1 B2 3 Dn1; Ś2 K4 D8 missing ) G1 M1 ins वैशं° उ° —a) Ś1 K ( K4 missing ) D2 5 एवमाश्वासितस्त्वा( K3 5 D2 °श्वा )पि; Ñ1 S स स( Ñ1 स स°; G2 स त )माश्वासित ( Ñ1 T1 G1 2 M1 °तस् ) तेन —b) K1 महामना —d) Ś1 K ( K4 missing ) B1 2 4 D2 इद वच, B3 Dn D3, 5 ( before corr ) 7 G2 परतप°, D6 परं वच M वाक्य तन् ( M1 त ) मोहनाशनं

Colophon missing in Ś2 K4 D8 —*Sub-parvan* K0 2 3 5 Ñ1 B Dn1 D1 3 4 6 7 9 विशोक —*Adhy. name* G2 धृतराष्ट्राश्वासन, M धृतराष्ट्रसमाश्वासनं ( M2 °श्वास° ) —*Adhy no* ( figures, words or both ) K1 D6 6 7 9 S 1 ( as in text ), B1 87 (?)

# २

वैशंपायन उवाच ।
ततोऽमृतसमैर्वाक्यैर्ह्लादयन्पुरुषर्षभम् ।
वैचित्रवीर्यं विदुरो यदुवाच निबोध तत् ॥ १
विदुर उवाच ।
उत्तिष्ठ राजन्किं शेषे धारयात्मानमात्मना ।
स्थिरजङ्गममर्त्यानां सर्वेषामेष निर्णयः ॥ २
सर्वे क्षयान्ता निचयाः पतनान्ताः समुच्छ्रयाः ।
संयोगा विप्रयोगान्ता मरणान्तं हि जीवितम् ॥ ३
यदा शूरं च भीरुं च यमः कर्षति भारत ।
तत्किं न योत्स्यन्ति हि ते क्षत्रियाः क्षत्रियर्षभ ॥ ४
अयुध्यमानो म्रियते युध्यमानश्च जीवति ।
कालं प्राप्य महाराज न कश्चिदतिवर्तते ॥ ५ C 11 50 B 11 2.5 K 11 2.5

## 2

☞ This adhy is missing in Ś1 K1 D8 (cf v.l 11 1 1 and 15)

1 a) K0-2.5 Ñ1 Dn2 D2.5 M2 -मयैर्, T G1.3 M1.3.4 -रसैर् (for समैर्) In Ś1, the portion of the text from क्यै up to यदु (in 1d) is damaged — b) D2 ह्लादयन्, D5 हृदियन्, Cd ह्लाद° (as in text) K0.1.5 B4 Dn2 D1.3.4-6.9 M2.3 पुरुषर्षम, K2.3 Ñ1 B1.3 D3.7 G3 M1 °र्षभ — c) K5 विचित्रवीर्य; T2 वैचित्र्यवीर्यं — d) K1 M1.2 निबोधत; D1 (sup lin) °ध यत्, D2 °ध ते

2 K0 T om the ref — a) Dn1 नृपते (for किं शेषे) — b) K5 धारयामात्मन्मात्मना (sic), D5 °यामाम(sup lin °न )मात्मना — c) D3 -सत्वानां (for -मर्त्यानां) K1-3.5 एव (for एष) —For 2cd, Ñ1 B D (except D2, D8 missing) S subst.

6* एषा वै सर्वसत्त्वाना लोकेश्वर परा गतिः ।

[B1 -लोकानां, B3 -भूताना (for -सत्त्वाना) M3 ससारे सर्वदा गतिः ]

3 = (var) 12 27 29, B 12 330 20 B 14 44 19, Rām 2 105 16, 7 52 11, Gobhila-smṛti 3 43, Kathāsaritsāgara 51 26cd–27ab, Divyāvadāna (Cowell) p 27 — a) D9 सर्वे क्षयान्तनिचया Cv as in text — b) K2 D2 समुच्छ्रिया, K5 °छ्या — c) D3 विप्रयोगांत — d) K0 मरणाते, G3 °णांतश् B3 Dn1 D1.4.6.7.9 S च (for हि)

4 a) M3 यदि (for यदा) G2 भीम (for भीरु) — b) K5 मम (for यम) K1 कर्षत (for °ति) M3.4 मृत्युर्वै सप्रकर्षति — c) Dn1 योत्स्यति Ś1 K0 ह (for हि) Ñ1 तत किं ते न योत्स्यंते, G2 तत्किं न योत्स्य निहता — In B3, the portion of the text from 4d up to the prior half of line 4 of 7* is written on marg — d) K1.2 D2 क्षत्रियर्षम, G3 भरतर्षभ

5 B3 reads 5 on marg — a) K2 G1 अयुध्यमानो K1.5 मृयते — b) D2 बुद्धिमानश्च (sic), G1 बुध्यमानश्च (for युध्य°) K8 तु (for च) — c) K5 प्राप्त (for प्राप्य) K5 Dn1 महाराजन् — d) G2.3 किंचिद् (for कश्चिद्) — After 5, K8 Ñ1 B D (except D2, D8 missing) ins

7* अभावादीनि भूतानि भावमध्यानि भारत ।
अभावनिधनान्येव तत्र का परिदेवना ।
न शोचन्मृतमन्वेति न शोचन्म्रियते नरः ।
एव सासिद्धिके लोके किमर्थमनुशोचसि ।
कालः कर्षति भूतानि सर्वाणि विविधान्युत । [5]
न कालस्य प्रियः कश्चिन्न द्वेष्यः कुरुसत्तम ।
यथा वायुस्तृणाग्राणि संवर्तयति सर्वशः ।
तथा कालवशं यान्ति भूतानि भरतर्षभ ।
एकसार्थप्रयाताना सर्वेषा तत्र गामिनाम् ।
यस्य कालः प्रयात्यग्रे तत्र का परिदेवना । [10]

[B3 reads up to the prior half of line 4, on marg With lines 1–2, cf 6 24 28 — (L 1) Cd cites prior half as above — (L 2) Cd अभावनिधनानि (as above) D3 (by corr, before corr as above) परिवेदना —(L 3) D5 आप्नोति (for अन्वेति) —(L 4) = (var) 11 3 14cd D9 किमनुशोचसि भारत (for the post. half) — (L 6) = 11 2 14ab B4 कालस्य न (by transp) Dn1 द्वेषः K8 प्रियकृत्तथा, D1.4.9 प्रियसत्तम (for कुरु°) —(L 7) Ñ1 भारत (for सर्वशः) —(L 9) K8 एक सार्थ, Dn2 D3.5 एकशोनु- —(L 10) Ñ1 [अ]भियात्यग्रे, D5 प्रयात्येवं (for °त्यग्रे) B1.2 तस्य (for तत्र) D1.4 परिवेदना.

न चाप्येतान्हतान्युद्धे राजञ्शोचितुमर्हसि ।
प्रमाणं यदि शास्त्राणि गतास्ते परमां गतिम् ॥ ६
सर्वे स्वाध्यायवन्तो हि सर्वे च चरितव्रताः ।
सर्वे चाभिमुखाः क्षीणास्तत्र का परिदेवना ॥ ७
अदर्शनादापतिताः पुनश्चादर्शनं गताः ।
न ते तव न तेषां त्वं तत्र का परिदेवना ॥ ८
हतोऽपि लभते स्वर्गं हत्वा च लभते यशः ।
उभयं नो बहुगुणं नास्ति निष्फलता रणे ॥ ९
तेषां कामदुघाल्लॅोकानिन्द्रः संकल्पयिष्यति ।
इन्द्रस्यातिथयो ह्येते भवन्ति पुरुषर्षभ ॥ १०
न यज्ञैर्दक्षिणावद्भिर्न तपोभिर्न विद्यया ।
स्वर्गं यान्ति तथा मर्त्या यथा शूरा रणे हताः ॥ ११
मातापितृसहस्राणि पुत्रदारशतानि च ।
संसारेष्वनुभूतानि कस्य ते कस्य वा वयम् ॥ १२

---

Ñ1 नस्य स्यान्मरणंतदा ( for the post half ) ]

6 $^{a}$) K1 M8 चाप्यैतान्, Dn1 चाप्येतद् — $^{b}$) T1 नायच्छोचितु° (sic) — $^{c}$) M2 शास्त्रादि ( for °णि ) Ś1 K ( K4 missing ) D2 5 शास्त्राणि चेत्प्रमाणानि ( Ś1 K0 °ण ते )

7 $^{a}$) K2 [ऽ]पि ( for हि ) — $^{b}$) K1-3 5 D5 M3 4 सु ( for च ) D9 om ( hapl ) च — $^{c}$) T1 चापि मखा , M1 चातिमुखा — $^{d}$) K3 D4 G3 परिवेदना

8 D5 om ( hapl ) 8 — $^{a}$) D1 4 9 आपतित° K1 अदर्शमाणा आपतिता , K3 5 °र्शनाश्च ( K5 °श्चा ) पतिता, Cd as in text — $^{b}$) D1 4 9 गत ( for गता ) — $^{c}$) K3 5 Ñ1 B Dn1 D1 4 6 7 9 नैते ( for न ते ) K3 वै ( for त्वं ) — $^{d}$) K3 D4 परिवेदना.

9 $^{a}$) T2 G2 3 M2-4 हतो हि, M1 हतोभि ( for हतोऽपि ) — $^{b}$) Ś1 K0 हंतापि, K1, 2 हतोपि, K3 5 ह( K5 हृ )ता च, B1 3 4 हत्वा वा; T G1 2 M जित्वा वा ( for हत्वा च ) G2 महीं ( for यशः ) G3 जित्वा पालयते यशः — $^{c}$) K1 उभयो ( submetric ), K3 उभयेतो, K6 उभयेष्वपि ( hypermetric ), B4 उभयाश्चो, D2 °यतो ( for उभय नो ) G2 बहुगुणा — $^{d}$) Some MSS निःफलता, G3 विष्फ°

10 $^{a}$) Ś1 K0 कामदुहो, K1 M8 °दुघाल्ल; Dn1 °दुघ; D4 T1 G3 °दुघां, M1 दुहां ( for °दुघाल्लँ ) — $^{b}$) Dn2 D3 इंद्र सवर्तयिष्यत ( D8 °ति ) — $^{c}$) K3 5 इन्द्रस्य तिथयो; D9 °स्यातिरथो — $^{d}$) Ś1 K0-2 D2 5 7 पुरुषर्षभा ( D7 °भः ), B1-3 भरतर्षभ

11 $^{b}$) K3 D2 विद्यते ( D2 °त ) ( for विद्यया ) — $^{c}$) K3 5 यथा, B1 2 रणे ( for तथा ) S ( except T1 ) स्वर्गं याति तथा मर्त्यो — $^{d}$) T1 यदा ( for यथा ) K6 हता रणे ( by transp ) S ( except T1 ) यथा शूरो रणे हतः — After 11, N ( Ś2 K4 D8 missing ) ins

8* शरीराग्निषु शूराणां जुहुवुस्ते शराहुतीः ।
हूयमानाञ्शरांश्चैव सेहुस्तेजस्विनो मिथः ।
एवं राजंस्तवाचक्षे स्वर्ग्यं पन्थानमुत्तमम् ।
न युद्धादधिकं किंचित्क्षत्रियस्येह विद्यते ।
क्षत्रियास्ते महात्मानः शूराः समितिशोभनाः ।
आशिषः परमाः प्राप्ता न शोच्याः सर्व एव हि ।
आत्मानमात्मनाश्वास्य मा शुचः पुरुषर्षभ ।
नाद्य शोकाभिभूतस्त्वं कार्यमुत्स्रष्टुमर्हसि ।

[ ( L. 1 ) K6 शरीराणि ( submetric ) ( for the prior half ) K3 Dn2 D8 च ( for ते ) K2 शराहुतिः, K3 5 °हुतिं — ( L. 2 ) K3, 5 Dn1 D5 हूयमाना ( K3 D5 °नाः ) K3 5 शूरास्, Ñ1 स्वर्गस्, B1 2 वसेतुस् ( for सेहुस् ) — ( L. 3 ) K1 2 D2 एतद्, D5 एन ( for एव ) K1 तथाचख्ये, K2 तवाचख्ये, K3, 5 तथा वक्ष्ये, Ñ1 तवाचक्ष, D2 4 तथाचक्षे ( for तवा° ) Ś1 K0 2 Ñ1 B1 2 D1-4 9 स्वर्गं, K1 स्वग्र, K3 D5 7 स्वर्गं ( for स्वर्ग्यं ) Dn1 स्वागमिथानमुत्तम ( corrupt, for the post half ) — ( L. 4 ) Dn1 न ( for [इ]ह ) — ( L. 5 ) K3 समीति, Dn1 तमिनि, D2 शमिति ( for समिति- ) — ( L. 6 ) Ś1 K ( K4 missing ) Ñ1 B1 2 4 Dn1 D2 5 7 9 आशिष ( D7 9 °ष ) परमा ( K2 °मा, K0 Ñ1 B4 D2 5 °म ) प्राप्ता ( K5 °प्ता ) — ( L. 7 ) Dn1 [आ]श्वस्य K1 2 3 पुरुषर्षभ ( for °भ ) — ( L. 8 ) K3 5 नान्यच्छोका° ( for नाद्य शोका° ) Ñ1 B1 2 4 कायम्, Cnp कार्यम् ( as above ) ]

12 = 12 28 38 ( var ) B 18 5 60 13$^{ab}$ = B 12 321 85$^{ab}$ — D2 om ( hapl ) 12$^{b}$–13$^{a}$ — $^{b}$) G2 -धनानि ( for -शतानि ) — B3 D3 om ( hapl ) 12$^{c}$–13$^{b}$ — $^{c}$) Ś1 K0 संसारस्यानु°, Dn2

शोकस्थानसहस्राणि भयस्थानशतानि च ।
दिवसे दिवसे मूढमाविशन्ति न पण्डितम् ॥ १३
न कालस्य प्रियः कश्चिन्न द्वेष्यः कुरुसत्तम ।
न मध्यस्थः क्वचित्कालः सर्वं कालः प्रकर्षति ॥ १४
अनित्यं जीवितं रूपं यौवनं द्रव्यसंचयः ।
आरोग्यं प्रियसंवासो गृध्येदेषु न पण्डितः ॥ १५

न जानपदिकं दुःखमेकः शोचितुमर्हसि ।
अप्यभावेन युज्येत तच्चास्य न निवर्तते ॥ १६
अशोचन्प्रतिकुर्वीत यदि पश्येत्पराक्रमम् ।
भैषज्यमेतद्दुःखस्य यदेतन्नानुचिन्तयेत् ।
चिन्त्यमानं हि न व्येति भूयश्चापि विवर्धते ॥ १७
अनिष्टसंप्रयोगाच्च विप्रयोगात्प्रियस्य च । C. 11 73 B. 11 2. 28 K 11. 2. 23

---

D₃ °रेप्यतु ( for °रेष्वतु ) —$^{d}$ ) Ś₁ damaged K₁ भय, K₃ चय ( for वयम् )

13 = 3 2 15 B 12 330 2 ( var ) B 18 5 61 B₃ D₂ om 13$^{ab}$, D₃ om 13$^{a}$ ( cf. v 1 12 ) —$^{b}$ ) Ś₁ K₀–₃ Dn₁ D₃ हर्षस्थान ( K₁ °नि ), M₃ भयस्थानि ( for °स्थान ) —$^{c}$ ) B₁ om ( hapl ) the second दिवसे —$^{d}$ ) Ś₁ K₀ नराधिप ( for न पण्डितम् )

14 14$^{ab}$ = line 5 of 7* —$^{a}$ ) K₃ ₄ कालस्य न ( by transp ) K₁ प्रिय, K₃ प्रिया° —$^{b}$ ) K₃ ₅ D₃ कुरुसत्तम —$^{c}$ ) Dn₁ मध्यस्था, M₂ °स्था D₃ सदा कचित् ( sic ), G₃ ( inf lin , orig as in text ) काल्ररूप सन् ( gloss ? ) ( for क्वचित्काल° ) —$^{d}$ ) Dn₁ सर्वं काल; D₃ काल सर्वं ( by transp ) Ś₁ प्रकर्षयेत् — After 14, N ( Ś₂ K₄ D₃ missing ) ins

9* काल पचति भूतानि काल संहरते प्रजा ।
काल सुप्तेषु जागर्ति कालो हि दुरतिक्रम ।

[ ( L 1 ) = ( var ) 1 1 188$^{ab}$ B₃ सहरति — ( L. 2 ) = Ādi 61* D₃ सुप्त ( for सुप्तेषु ) K₁ दुरतिक्रम° ]

15 = ( var ) 3 2 45 B 12 330 14 —$^{ab}$ ) Ś₁ अस्थिर, K₀ अस्थिर, K₃ अनित्य ( for °त्य ) K₁–₃ ₅ B Dn D₁–₇ ₈ transp जीवित ( Dn₂ जीवन ) and यौवन T₂ यच्वन, G₂ यौव्वन Ś₁ K₁ ₂ D₃ M₁ द्रव्यसचया ( K₁ °या ), Ñ₁ घनसंचय, D₃ द्रवसयुत ( sic ), G₂ ₃ द्रव्यसचयं, M₃ दिव्यसंचय —$^{c}$ ) Ñ₁ सर्वभूतानां; G₁ प्रियसंवासा —$^{d}$ ) Ñ₁ तत्र; D₆ तेषु ( for एषु ) K₃ गृध्येनैतेषु पण्डित; K₃ न गृध्येसेषु पं°, S ( except M₃ ) गृध्ये( T₁ °घ्ने )न्न ह्येषु प° Cd cites गृध्येदेषु न ( as in text )

16 16$^{ab}$ = ( var ) B 12 330 15$^{ab}$ —$^{a}$ ) Ś₁ राज**धिक, K₁ ₂ D₂ ₅ न सा( D₂ चा )र्यजनित ( K₁ °क ), K₃ ₅ न( K₅ नि- )जनापदिक; Dn₁ न जानत्यदिक, D₃ न जानन्यदि वा, T G न हि जानपद Cd cites जानपदिकं ( as in text ) —$^{b}$ ) D₉ om ( hapl ) from कः up to °ज्यमे ( in 17$^{c}$ ) T₁ कश्चित् ( for एक ) D₃ शोचतुम् B₁ ₂ ₄ Dn₂ D₇ T G₁ M₂–₄ अर्हति ( for °सि ) —16$^{cd}$ = B 12 330 7$^{cd}$ —$^{c}$ ) M₃ ₄ यद् ( for अपि ) Ś₁ युज्येत, K₁ युज्येन, K₃ B₂ ₄ Dn₁ D₆ ₇ युञ्जेत ( for युज्येत ) K₅ यथावदनु युज्येत, B₁ अभिप्यभावेन युञ्जेत ( corrupt ), T₁ अन्यभावेन युज्येत, G₃ अथ भासेव यु° Cd cites अभावेन ( as in text ) —$^{d}$ ) K₁ ₂ D₂ ₅ सतश्चास्य; D₃ तवास्य न, T₂ तच्चाह्य न, M₁ ₂ ₄ न तच्चास्य ( by transp )

17 K₅ Ñ₁ om ( ? hapl ) 17 D₉ om up to मे in 17$^{c}$ ( of v 1 16 ) —17$^{ab}$ = ( var ) B 12 330 15$^{cd}$. —$^{a}$ ) G₃ M₃ न ( for अ- ) D₃ प्रतिकुर्वति —$^{b}$ ) D₃ पश्चात् ( for पश्येत् ) —17$^{cdef}$ = ( var ) B 12 330 12 —$^{c}$ ) K₁ भेषज्यम्, Cd भैषज्यम् ( as in text ). —$^{e}$ ) B₁ चिंत्यायान Ś₁ K₀ न नश्येत, K₁ ₂ Dn₁ D₅ हि ना( Dn₁ न )त्येति, B₁ ₂ T G₁ ₂ हि नापैति G₃ च नो व्येति, M₁ ₂. ₄ हि न व्येति, M₃ *नैवेति. Cd cites नापैति —$^{f}$ ) Ś₁ K₀–₂ D₂. ₅ चैव, D₃ चापि ( for चापि ) K₁ विवर्धित , K₃ Dn₁ D₁ ₂ ₄ ₆ ₇ ₉ प्र( D₂ वि )वर्तते, B Dn₂ D₃ प्रवर्धते

18 = ( var ) 3 206 16 ( var ) B 12 330 4 —$^{a}$ ) D₉ अनिष्ट, M₁ अनिष्ट ( for °ष्ट- ) —$^{b}$ ) G₂ सं ( for च ) — After 18$^{ab}$, B₁ ₄ S ins

10* अलब्धलाभा क्लिश्यन्ते लब्धलाभानुपातिन ।

[ B₁ T G₁ अलब्धलाभात्, G₃ °ब्धाश्चैव ( for °ब्धलाभा ) G पश्यते ( for क्लि° ) G₁ लुब्धा, M₃ लब्धा ( for लब्ध- in the post. half ). T₁ -पानिना; G₂ ₃ -पातिना, M₁ -वर्तिन, M₃ ₄ तापिन ( for -पातिन ) B₁ ₄ लब्धलाभान्व( B₄ °भावानु )पालनात् ]

— K₃ repeats 18$^{cd}$ after 19$^{ab}$ —$^{c}$ ) Ś₁ K₀ D₁ ₄. ₉ मानुषा ( for मनुष्या ) K₀ ₃ ₅ ( both times ) D₃ T M₁ मानुषैर्, B₁ मनसैर् ( for मा° ) —$^{d}$ ) K₁. ₂ युज्यंते

मनुष्या मानसैर्दुःखैर्युज्यन्ते येऽल्पबुद्धयः ॥ १८

नार्थो न धर्मो न सुखं यदेतदनुशोचसि ।
न च नापैति कार्यार्थात्त्रिवर्गाच्चैव भ्रश्यते ॥ १९

अन्यामन्यां धनावस्थां प्राप्य वैशेषिकीं नराः ।
असंतुष्टाः प्रमुह्यन्ति संतोषं यान्ति पण्डिताः ॥ २०

प्रज्ञया मानसं दुःखं हन्याच्छारीरमौषधैः ।
एतज्ज्ञानस्य सामर्थ्यं न बालैः समतामियात् ॥ २१

शयानं चानुशयति तिष्ठन्तं चानुतिष्ठति ।
अनुधावति धावन्तं कर्म पूर्वकृतं नरम् ॥ २२

यस्यां यस्यामवस्थायां यत्करोति शुभाशुभम् ।
तस्यां तस्यामवस्थायां तत्तत्फलमुपाश्नुते ॥ २३

इति श्रीमहाभारते स्त्रीपर्वणि द्वितीयोऽध्यायः ॥ २ ॥

---

ये, K3 ७ प्रयु( K5 second time °यु )ज्यते, B1 2 Dn1 D1 2 6 7 9 दह्यते च, D4 दुह्यते च, T1 रुज्यंते ये K5 पुबुद्धय (sic), B8 ( m as in text ) [ऽ]ल्प मेधस Ñ1 क्लिश्यतेत्यतबुद्धय, B4 युज्यते मदत्तु°

19 $19^{ab}$ = ( var ) B 12 330 $7^{ab}$ — $^{a}$) K5 तीर्थं; Dn1 नाथे, D8 T2 नार्थे ( for नार्थो ) — $^{b}$) Ñ1 य एवम्, D8 यदैतद्; G3 M3-4 योसीतम् ( for यदेतद् ) Ñ1 B2 4 S °शोचति — After $19^{ab}$, K5 repeats $18^{cd}$ — $^{c}$) D7 नचै K3 5 [अ]प्युपैति, Ñ1 नाभ्येति, D6 ( before corr ) [ए]वाप्नोति, D9 लाभेति ( for नापैति ) Ś1 K0 कार्यार्थंस, K3 कार्याणि, K5 Ñ1 कार्यार्थं, B8 °र्थांस् S तच्च ( G2 कश्च ) नाप्नो( G1 °पै )ति कार्यार्थं — $^{d}$) M3 त्रिवर्गाश्, Cd त्रिवर्गाच् ( as in text ) G3 चेव ( for चैव ) Ñ1 B Dn D1 3 4 6 7 9 हीयते, G2 3 M4 ह( G3 inf lin also न )-श्यते ( for भ्र° ) Ś1 K0 3 5 त्रिवर्गाक्रश्य( K0 °र्गाक्रश्य, K5 °र्गाश्रमस्य )तेपि च, K1 2 D2 5 °र्गाक्र( K1 °ऋ ) श्यते भ्रिय

20 = ( var ) B 12 330 19 — $^{a}$) K1 अन्यामन्या K3 5 म( K5 ह )हावस्था, D6 7 च येवस्था ( for धना ) S अन्योन्यबाधनावस्थां ( T1 °स्थान् ) — $^{b}$) K1 Dn1 वैशेषिका, K3 वेशिषिका, D2 वै शोषिका, T1 वैष धिकान्, T2 G1 वैषयिकीं ( G1 °कां ) G2 रौप्य वैशे-षिक नर ( sic ), G3 प्राप्यन्ते शौषिका नरा Cd cites वैशेषिकीं ( as in text ) — $^{c}$) Ñ1 प्रमुह्यते, T2 °ह्यत — $^{d}$) = 3 2 $44^{b}$, 206 $20^{b}$ B1 सतोषा, Dn2 संतुष्टिं Dn1 पाडवा ( for पण्डिता )

21 = ( var ) 3 206 15 B 12 330 13 — $^{a}$) K2 प्रज्ञाया, G2 प्रजाय — $^{b}$) K2 शरीरम् D2 औषधी, M3 ओषधै — $^{c}$) K5 एतत्कार्यंममात्सर्यं — $^{d}$) Ś1 K ( K4 missing ) D2 5 व्रजेत् ( for इयात )

22 $^{a}$) Dn1 वा ( for च ) Ñ1 B Dn D1 3 4 6 7 9 -शेते हि ( B8 °तेति ) ( for शयति ) Ś1 K ( K4 missing ) D2 5 अनुशेते शयान च ( Ś1 K0 हि ) — $^{b}$) M2 तिष्ठता D1 6 ( before corr ) 7 चारु ( for चानु° ) B8 तिष्ठति — $^{c}$) K0 2 अनुधावति — $^{d}$) Ś1 K0 पूर्वकर्म ( by transp ), D6 कर्म पूर्वं Dn1 तर ( for नरम् )

23 $^{a}$) Cd as in text — Ñ1 M1 om ( hapl ) $23^{bc}$ — $^{b}$) K0 तत्, K5 य, D9 क ( for यत् ) D4 करोषि — $^{c}$) T2 अवस्थाया — $^{d}$) K1 उपासते; T G अवाप्नुते, M2 उपारता ( for °श्नुते ) K3 5 तत्त थैवमुपश्नुते, Ñ1 B Dn D1 3 4 6 7 9 तत्फल समुपा° — After 23, N ( Ś2 K4 D8 missing ) ins

11* येन येन शरीरेण यद्यत्कर्म करोति यः ।
तेन तेन शरीरेण तत्तत्फलमुपाश्नुते ।
आत्मैव ह्यात्मनो मित्रमात्मैव रिपुरात्मनः ।
आत्मैव ह्यात्मनः साक्षी कृतस्यापकृतस्य च ।
शुभेन कर्मणा सौख्यं दुःखं पापेन कर्मणा ।
कृतं भवति सर्वत्र नाकृतं भुज्यते क्वचित् ।
न हि ज्ञानविरुद्धेषु बह्वपायेषु कर्मसु ।
मूलघातिषु सज्जन्ते बुद्धिमन्तो भवद्विधाः ।

[ K0 om lines 1–3 B4 om ( hapl. ) the post half of line 1 and the prior half of line 2 — ( L 1 ) Cd cites prior half as above Ñ1 न ( for य ) — ( L 2 ) Ñ1 न, B3 lacuna ( for the first तत् ) B4 Dn1 D1 4 6 7 9 तत्फल समुपाश्नुते ( for the post half ) — ( L 3 ) Cf 6 28 $5^{cd}$ Ś1 आत्मा वै, K2 आत्मनैव ( for आत्मैव ) K1-3 5

# ३

## धृतराष्ट्र उवाच ।

सुभाषितैर्महाप्राज्ञ शोकोऽयं विगतो मम ।
भूय एव तु वाक्यानि श्रोतुमिच्छामि तत्त्वतः ॥ १
अनिष्टाना च संसर्गादिष्टाना च विवर्जनात् ।
कथं हि मानसैर्दुःखैः प्रमुच्यन्तेऽत्र पण्डिताः ॥ २

## विदुर उवाच ।

यतो यतो मनो दुःखात्सुखाद्वापि प्रमुच्यते ।
ततस्ततः शमं लब्ध्वा सुगतिं विन्दते बुधः ॥ ३
अशाश्वतमिदं सर्वं चिन्त्यमानं नरर्षभ ।
कदलीसंनिभो लोकः सारो ह्यस्य न विद्यते ॥ ४ C. 11 87 B 11. 3. 4 K 11 3 4

---

Ñ1 B2 Dn3 D2 3 5–7 बधुर, Dn1 मित्र (for मित्रम्) —(L 4) Ko आत्ना ं (for आनैव) Ñ1 आत्नैव मार्क्षा मवन्य (for the prior half) K4 तत्तम्य (for कृतम्य) D1. 2 4 6 7 9 [अ]न्य (for [अ]त्र) Dn3 D3 वै (for च) Dn1 म तस्याप्यकृतस्य च Cd cites अपकृतस्य (as above) —(L 5) Ś1 damaged from (the first) ना up to दुस्व Ko पान्पेन (for पापेन) —(L 6) Ś1 Ko लमेन, K1 2 रमनि, B1 फलति, Dn3 D2 5 रमति (for भवति) B1 युज्यते, B2 4 Dn1 D1. 6 9 विद्यते, D2 जुज्यते (for जु°) जुज्यते क° damaged in Ś1 —Lines 7–8 = (var) 3 240 3 Rām 5 51 18 —(L. 7) Ś1 damaged up to द्वे. K1 B1. 3 4 Dn2 D1 3 4 6 7 9 बहुपापेषु, Dn1 पापेषु बहु- (for बहुपापेषु) —(L 8) K1 2 3 Dn3 D2 5 श्रेयो- (for मूल) K3 6 भजन्ति ]

Colophon missing in Ś2 K4 D8 —*Sub-parvan* Ś1 Ko 2 3 B Dn1 D1. 3 4 6 7 9 विशोक —*Adhy name* Ś1 T विदुरवाक्य, K1 धृतराष्ट्रविशोक, K2 D3 5 धृतराष्ट्रविशोके (K2 °को) विदुरवाक्य, G4 शरीरानित्यकथन, M कालशक्तिकथन —*Adhy no* (figures, words or both) K1 Dn2 D3 5 6 7 9 S 2 (as in text), B1 88 (?)

### 3

☞ This adhy is missing in Ś2 K4 D8 (cf v l 11 1 1 and 15)

1 a) T G सुभाषित (G5 °ता) (for °तैर्) K2 महाराज, D5 °भाष्य, D6 भाग, D7 महिभाग (for महाप्राज्ञ) —b) Ñ1 S मे (for ऽय) T G1 3 [s]-पगत (G2 °ह)त (for विगतो) Ñ1 S प्रभो (for मम) —c) D6 7 सु- (for तु)

2 b) K3 5 D1 (by corr) दुष्टाना (for इ°) K1 त्रिवर्जितात्, K3 Ñ1 B D1 4 6 7 9 विसर्जनात्, S (except M2) नि(M2 त्रि)वर्तनात् (for विवर्ज°) —c) Ś1 Ko 3 B1 तु, K1–3 Dn1 D5–7 तु (for हि) S कथं वै मानसैर्दुःख (M2 °सैर्दुःखै°) —d) K2 प्रमुच्यते (for °च्यन्ते) K1 2 Ñ1 B2 3 Dn D1–7 9 तु, K6 न, B1 4 च (for ऽत्र) S विप्रयुज्य(T1 °योज्य, G2 3 M3 °युज, M2 °युज्य)ति पण्डिता°

3 a) G2 3 दुःख (for दुःखात्) —b) D5 सुखी (for सुखाद्) B4 च (for वा) Ko Ñ1 B1–3 Dn D1 2. 4 6 7 9 T G3 M1–3 हि (for [अ]पि) G1 प्रयुज्यते (for प्रमुच्यते) G3 तत्सुखत्वात्प्रमु° —c) K1 D2 5 G8 शम लब्धा (D2 °ब्ध्वा), Ñ1 B3 Dn D1 3 4 6 7 9 नियम्यैतत्; B1 2 4 सम बुद्धा Ś1 ततश्च * * * लब्ध्वा —d) Ś1 सुगत, K3 [आ]युगातिं; K3 गतिं वै, Cd सुगतिं (as in text) D2 विदतं B3 नर°, Dn2 पुन (for बुध°) K6 गतिं नु विद्यते बुध°, Dn1 म्वा गतिं विंदतो बुध°, D1 4 9 शातिं (D9 मोभि) विंदेत वै बुध°

4 a) K1. 2 आशाश्वतम् —b) D2 विद्यमान (for चिन्त्य°) K2 5 D2 नरर्षभ; D9 भरतर्षभ (hypermetric) G3 सर्वित भरतर्षभ —d) Ś1 Ko. 2 3 सारमत्र, K1 2 D3 5 सारमस्य, D9 सारो ह्यत, M3 सारो ह्यस्या Cd cites सार (as in text) G3 रोच्यते (for विद्यते) —After 4, Ñ (Ś2 K4 D8 missing) ins

12* यदा प्राज्ञाश्च मूढाश्च धनवन्तोऽथ निर्धना ।
सर्वे पितृवन प्राप्य स्वपन्ति विगतज्वरा ।
निर्मांसैरस्थिभूयिष्ठैर्गात्रैः स्नायुनिबन्धनै ।
किं विशेष प्रपश्यन्ति तत्र तेषा परे जना ।
येन प्रत्यवगच्छेयु कुलरूपविशेषणम् । [5]
कस्मादन्योन्यमिच्छन्ति विप्रलब्धधियो नरा ।

[(L 1) D1 9 यद-, D3 यथा (for यदा) K3

गृहाण्येव हि मर्त्यानामाहुर्देहानि पण्डिताः ।
कालेन विनियुज्यन्ते सत्त्वमेकं तु शोभनम् ॥ ५
यथा जीर्णमजीर्णं वा वस्त्रं त्यक्त्वा तु वै नरः ।
अन्यद्रोचयते वस्त्रमेवं देहाः शरीरिणाम् ॥ ६
वैचित्रवीर्य वासं हि दुःखं वा यदि वा सुखम् ।
प्राप्नुवन्तीह भूतानि स्वकृतेनैव कर्मणा ॥ ७
कर्मणा प्राप्यते स्वर्गं सुखं दुःखं च भारत ।
ततो वहति तं भारमवशः स्ववशोऽपि वा ॥ ८
यथा च मृन्मयं भाण्डं चक्रारूढं विपद्यते ।
किंचित्प्रक्रियमाणं वा कृतमात्रमथापि वा ॥ ९
छिन्नं वाप्यवरोप्यन्तमवतीर्णमथापि वा ।
आर्द्रं वाप्यथ वा शुष्कं पच्यमानमथापि वा ॥ १०
अवतार्यमाणमापाकादुद्धृतं वापि भारत ।
अथ वा परिभुज्यन्तमेवं देहाः शरीरिणाम् ॥ ११

---

भाष्ठश्च मूढश्च, K6 भाग्यस्य मूढस्य K8 6 D8 धनवत्तोप्य निर्धना —(L 2) Dn2 यथा (for सर्वे) Ś1 K0 8 5 B1 (also as above) Dn2 D8 6 7 पितृवन, B1 °वम, Cd °वश (as above) K1 2 D2 4 5 य(D4 त)थापि निधन प्राप्य (for the prior half) Dn1 स्व पति (for स्वपन्ति) Ś1 विगतत्वच —(L 3) Dn D1 3 4 6 7 9 °निवधिमि° K3 गात्रस्नायुनिबोधनै —(L 4) D5 परा जैना (for परे जना) —(L 5) Cd प्रलय° (as above) — Ñ1 om line 6 —(L 6) K8 5 तस्मा(K6 °स्या)द् (for क°) K8 5 जना (for नरा) Cv विप्रलम्भाधयो नरा (for post half) ]

5 [a]) Ś1 गृहान्येव, K8 B Dn D1 3 4 6 7 9 °णीव, K6 गृह्यास्येव Ñ1 बहिर्मर्त्यान्, Dn1 च मर्त्यानां (for हि म°) M4 गृहानिवेह मर्त्यानाम् —[b]) Dn1 मातुर् (for आहुर्) G3 देहांश्च, M3–4 देहान्हि (for °नि) —[c]) G2 °युज्येत (for °युज्यन्ते) Ś1 K0 काले काले वियुज्यंते (K0 °ति) —[d]) K3 सत्यम् (for सत्त्वम्) D6 एव; S एषा (for एकं) K1 2 D2 5 सुशोभन (K1 °य), Ñ1 B1–3 Dn D1 3 4 6 7 9 तु (Dn2 D8 स) शाश्वत, G2 तु भाजनं

6 [a]) D2 तथा (for यथा) D9 om (hapl) जीर्णम —[b]) Ś1 K (K4 missing) D3 5 सत्यज्य; S त्यक्त्वाथ (M1 त्यक्त्वा च) (for त्यक्त्वा तु) Ñ1 B (except B4) D (except D2 5, D8 missing) S पुरुष (for वै नर) —[d]) Ś1 K8 5 देह; M2 देहात्; M8 देहान् K8 शरीरिण K1 2 D2 5 दुःखं तद्वच्छरीरिणां (K2 °र्णी)

7 G8 repeats $7^{ab}$ after 11 —[a]) Ś1 विचित्तवीर्ये, K2 वैचित्रविर्ये; K8 5 D9 विचित्रवीर्ये, G8 (both times) वैचित्रि° K0 जानीहि (for वास हि) Ś1 वा (lacuna), K1 D2 प्राप्य, K2 प्रार्थं; K8 Ñ1 B Dn D1 3 4 6 7 9 साध्य; D5 प्राप्य, T1 सत्य; T2 G1 सत्त्व (for वासं) —[c]) B1 Dn1 T G2 हि (for [इ]ह). Ś1 K (K4 missing) D2 5 6 7 (by corr, orig as in text) प्राप्नुवति नरा सर्वे —[d]) K8 5 B1 सु(B4 स्व)कृतेनेह, B3 Dn D1 4 6 7 9 M8 सुकृतेनैव

8 [a]) Ś1 K (K4 missing) D2 5 प्राप्यते कर्मणा (by transp) Ś1 K0 2 3 5 D5 G8 सर्व, K1 सर्वे, Ñ1 B D1 4 6 7 9 T G1 M1 स्वर्गं, Dn1 स्वर्गा (for स्वर्गं) —[b]) G1 M2 सुख (for सुखं) —[c]) T2 वहति, M2 महति (for व°) K2 Dn2 T1 स (for त) —[d]) T1 अवश्य (for °श°) K0 च (for वा)

9 D8 om (hapl) $9^{a}$–$10^{b}$ —[a]) K8 5 हि (for च) T1 G8 मृण्मय, G1 क्रमय —[b]) K1 D2 यन्त्रारूढ, D6 वंशा°, T1 चक्र°, G1 चक्ररूप Cd cites चक्र —[c]) K8 G3 प्रक्रीयमाणस्य; Ñ1 प्रक्रियमानस्य, T2 °माण स्वा (for °माण वा) —[d]) Dn2 हतमात्रम्, G8 M1 2 क्रियमाणम् (for कृतमात्रम्) M2 तथा (for अथ)

10 Ś1 om (hapl) 10 K0 reads 10 on the marg B3 D8 M2 om $10^{ab}$ (for D8, cf v l. 9) D2 transp $10^{ab}$ and $10^{cd}$ —[a]) K0 Ñ1 छन्न[?]; D2 सछिन्न, T G हीनं; M (M2 om) भिन्न (for छिन्न) K1 2 सछिन्नम् (for छिन्नं वापि) Dn2 [अ]थ वा रोप्यम्, T1 G1 3 [अ]वरोप्य वा (G8 तद्); T2 [उ]परोप्य वा (for [अ]वरोप्यन्तम्) —[b]) K8 Dn1 अवतीर्य(Dn1 °र्ये)म् (for °तीर्णम्) G2 अतीर्णमतथापि वा —Ñ1 G2 om (hapl) $10^{cd}$ —[c]) D5 आर्द्रैं (for आर्द्रं) K8 om the first वा K5 G8 transp वा and शुष्क D4 शुष्कैर् (for शुष्क) —[d]) K5 यच्यमानम् (sic), D5 अत° (for पच्य°) Dn2 [उ]त (for वा)

11 [a]) Hypermetric K1 2 Ñ1 Dn2 D2 5 उत्तार्यमागम्; Dn1 D1 (*sup lin* as in text) 3 6 7 अवतीर्य°, T G अवतार्यतम्, M1 आवार्यमाणम् (for अवतार्य°) K8 5 B1 वापाकाद्, Dn1 अपि वा; Dn2 आकाशाद्; D9 आवाकाद् (for आपाकाद्) In Ś1,

गर्भस्थो वा प्रसूतो वाप्यथ वा दिवसान्तरः ।
अर्धमासगतो वापि मासमात्रगतोऽपि वा ॥ १२
संवत्सरगतो वापि द्विसंवत्सर एव वा ।
यौवनस्थोऽपि मध्यस्थो वृद्धो वापि विपद्यते ॥ १३
प्राक्कर्मभिस्तु भूतानि भवन्ति न भवन्ति च ।
एवं सांसिद्धिके लोके किमर्थमनुतप्यसे ॥ १४

यथा च सलिले राजन्क्रीडार्थमनुसंचरन् ।
उन्मज्जेच्च निमज्जेच्च किंचित्सत्त्वं नराधिप ॥ १५
एवं संसारगहनादुन्मज्जननिमज्जनात् ।
कर्मभोगेन बध्यन्तः क्लिश्यन्ते येऽल्पबुद्धयः ॥ १६
ये तु प्राज्ञाः स्थिताः सत्ये संसारान्तगवेषिणः ।
समागमज्ञा भूतानां ते यान्ति परमां गतिम् ॥ १७ C. 11 103 B. 11 2.20 K. 11 2.20

इति श्रीमहाभारते स्त्रीपर्वणि तृतीयोऽध्यायः ॥ ३ ॥

---

lacuna for पाका D₄ भवतार्यमाणापाकोड — [b]) K₁ ₄ D₂ उद्धृतम्, K₂ उद्धृत (for उद्धृत) K₁ D₂ ₃ अपि, K₂ Ñ₁ B Dm D₁ ₂ ₄ ₇ ₉ चापि (for वापि) — [c]) K₀ °भुञ्जतम्, K₁ ₂ Ñ₁ D₅ °भुज्यते K₃ °भुज्यतम्; B₁₋₃ Dn₁ °भू(B₁ °भु)ञ्जतम्, B₄ °भुक्त तु D₁ (marg) °भुञ्जतम्, D₆ (by corr orig as in text) भञ्यतम्, Cd भुञ्जन्तम् (as in text) — [d]) K₁ ₄ मेव Ñ₁ सर्वं [!], D₂ क्व D₁ एते (for एव) K₀ देह, D₃ देह S₁ एव देह ....., B₄ देहतोपि हारी — After 11, G₂ repeats 7[ab]

12 [a]) S₁ ..स्थो, Cd गर्भस्थो (as in text) Dn₂ विनातो D₂ प्रवृत्तो (for प्रसूतो) — [b]) T G₂ ₃ M₁₋₄ अथ (for [अ]प्यथ) K₂ ₃ B₁ दिवमांतर (B₁ °रे); S दशरात्रि(G₁ ₃ °त्र)क Dn₂ दिवसैक गतोथ वा — [c]) S₁ damaged Dn₁ यतो (for गतो) — [d]) S₁ ..त्र, Ñ₁ मासत्रय, D₁₋₂ G₁ M₁ मासमात्र (for °मात्र°) K₁ ₂ D₂ °मयोपि; D₃ M₁ अयापि (for गतोऽपि)

13 [b]) Ś₁ द्विसंवत्सर, K₃ ₄ द्विवसांतर; M₄ विम वत्सर Dn₁ °गतोपि (for एव) Ś₁ K₀ D₁ ₂₋₃ च (for वा) — [c]) T₁ यौवन° K₁₋₃ ₄ [ऽ]प्य°, Ñ₁ B D (D₂ missing) M [ऽ]थ (for ऽपि) — [d]) D₂ च विद्यते (for विप°)

14 [a]) G₂ प्राक्कर्मजानि भू° — [b]) M₂ om (hapl) न भवन्ति K₂ वा (for च) Cd cites भवन्ति and न भवन्ति (as in text) — [c]) K₂ ₃ सामिद्धिक, T सर्वार्थिते, G₁ समिद्धके, M समिद्धिके (M₁ °को), Cd सामारिके G₂ ₃ एवं समिध्य (G₂ °द्ध) लोके तु — [d]) K₁ °तप्यते

15 [a]) Ñ₁ B Dn D₁ ₂ ₄ ₆ ₇ ₉ तु (for च) Ñ₁ D₂ सलिक, D₂ सलिले K₀ राजा (for राजन्) — [b]) K₁ D₂ ₃ समरन्, K₂ Dn₁ (before corr) D₅ °सम्परन्, K₂ ₃ °मचरेत्, Ñ₁ B₃ ₄ °सतरन्, B₁ ₂ °मतरेत् — [c]) K₁ उन्मज्जेच्च D₂ निमज्जेत (for °ज्जेच्च) K₄ ₅ उन्मज्जे च निमज्जे च, D₂ °ज्जत्वनिमज्जत्व, T °ज्यैश्च निमज्यैश्च — [d]) T G₁ चेष्टते च (T₁ हि) नराधिप

16 B₂ om. 16[a]–17[b] — [a]) Ñ₁ B (B₂ om) Dn D₁ ₂ ₆ ₇ ₉ °गहने (Dn₂ °न), D₂ °गे गेहे (sic), D₅ °गहना, G₂ °गहनम् (for °नाद्) — [b]) K₂ उन्मग्न (for °ज्जन) Ñ₁ B (B₂ om) निमज्जन, Dn D₁ ₂ ₄ ₆ ₇ ₉ °जने, M₄ °जना (for °जनात्) — [c]) Dn₁ D₂ कर्मभागेन, S °योगेन Ñ₁ B (B₂ om) Dn D₁ ₄ ₇ (before corr) ₉ T ब(D₁ ₂ ₄ ₉ व)ध्यते; D₆ ₇ (by corr) मन्यते; G₁ बुध्यते, G₂ ₃ युज्यते, M₂ बध्यत; M₂ वध्यत (for बध्यन्त) — [d]) T₁ क्षिप्यते (for क्लिश्यन्ते) Ñ₁ ह्यल्प, Dn₁ D₁ ₄ ₆ ₇ ₉ चाल्प, T G₁ स्वल्प, M₂ यल्प, M₃ ₄ ये त्व (for येऽल्प°) — For 16[cd], Ś₁ K (K₄ missing) D₂ ₃ subst, while B₁ ₂ ₄ ins after 16[cd]

13* ज्ञानयोगेन महता समुत्तीर्णा महर्षय ।
[D₂ समुत्तीर्णे महार्णव (for the post half)]

17 B₂ om 17[ab] (cf v 1 16) — [a]) Ś₁ K (K₄ missing) D₅ ₃ च (for तु) K₂ प्राज्ञा, G₂ प्रज्ञा, M₂ प्रज्ञा K₂ B (B₂ om) Dn₁ D₁ ₂ ₄ ₆ ₇ ₉ सत्वे, Ñ₁ सर्वे, D₅ स्पष्टा, S मध्ये (for सत्ये) — [b]) K₂ Dn₁ D₁ ₄ ₆ (before corr) ₉ संसारेस्मिन् K₁ ससाराग, Ñ₁ °रान्तु, D₂ समारान्त, D₆ (by corr) ₇ ससारे वि T₂ G₂ ₃ °रांतर्, M₄ °रांता (for °रान्त°) Ñ₁ D₂ ₁₋₂ S गवैषिण (Ñ₁ °न); Dn₁ D₁ ₄ ₉ हितैषिण (for गवे°) — [c]) K₂ समागमता; K₃ सम्यग्ज्ञान, B₁ समागमज्ञा — [d]) Dn₁ परा (for परमां) D₂ ये ते यांति परा गतिं

# ४

4 1 1 धृतराष्ट्र उवाच ।
कथं संसारगहनं विज्ञेयं वदतां वर ।
एतदिच्छाम्यहं श्रोतुं तत्त्वमाख्याहि पृच्छतः ॥ १
विदुर उवाच ।
जन्मप्रभृति भूतानां क्रियाः सर्वाः शृणु प्रभो ।
पूर्वमेवेह कलले वसते किंचिदन्तरम् ॥ २
ततः स पञ्चमेऽतीते मासे मांसं प्रकल्पयेत् ।
ततः सर्वाङ्गसंपूर्णो गर्भो मासे प्रजायते ॥ ३
अमेध्यमध्ये वसति मांसशोणितलेपने ।
ततस्तु वायुवेगेन ऊर्ध्वपादो ह्यधःशिराः ॥ ४
योनिद्वारमुपागम्य बहून्क्लेशान्समृच्छति ।
योनिसंपीडनाच्चैव पूर्वकर्मभिरन्वितः ॥ ५
तस्मान्मुक्तः स संसारादन्यान्पश्यत्युपद्रवान् ।
ग्रहास्तमुपसर्पन्ति सारमेया इवामिषम् ॥ ६

---

Colophon missing in Ś2 K4 D8 — *Sub parvan* Ś1 K0 5 B Dn1 D1 3 4 6 7 9 विशोक — *Adhy namo* Ś1 K0 D2 9 विदुरवाक्य, K1 विदुरवचन, G3 M1 2 4 श( G3 शा )रीरानित्यकथन — *Adhy no* ( figures, words or both ) K1 Dn2 D2 3 6 7 9 S 3 ( as in text ), B1 89 (?) — *Śloka no* K1 17, D2 18

## 4

☞ This adhy is missing in Ś2 K4 D8 ( cf v l 11 1 1 and 15 )

1 b) D8 विदेयं ( for विज्ञेय ) K1 2 5 वर', K3 D6 7 वर ( for घर ) — d) B3 Dn1 सत्त्वत', G2 M Cd पृच्छते ( for 'त. )

2 b) K1 त्तया' (sic); D2 कथा' ( for क्रिया ) Ś1 K0 3 5 शृणुष्व मे; T2 G2 3 M3 तु लक्षयन् ( for शृणु प्रभो ) B3 Dn1 D1 3, 4 6 7 9 क्रिया सर्वोपलक्ष्यसे, T1 G1 क्रियागर्भास्तु ( G1 क्रियास्तु परि ) लक्षयन्; M1, 2 4 क्रिया' समवधारयेत् ( M1 'यन् ) — D8 om ( hapl ) 2c–3d — c) K0 2 G3 हि, K1 ह ( for [ह]ह ) Ś1 K0–3 D2 वसति, K5 वसति; Ñ1 Dn1 D1 4–7 9 कलिले, B1 2 4 वसतिं, Dn2 वसते, T G1 3 M कलि( M2 'ल )ल; G2 सलिल ( for कलले as in B3 only ) — d) Ś1 K0–2 Dn2 D2 कलिले; K3 कलले, K5 सलिले, M1 वर्तते ( for वसते ) B1 2 4 मास शोणितलेपने ( =4b ) — After 2, B1 4 ins

14* ततस्तु वायुवेगेन कलल किंचिदन्तरम् ।

[ =4c and ( var ) 2d B1 कलो किंचिदनतर ( for the post half ) ]

3 D8 om 3 ( cf v l 2 ) — a) K1 corrupt Dn1 सपचमे, D7 संचरते — b) G2 3 M मासि ( for मासे ) M2–4 मास ( for मांस ) T G प्रकल्पयत्; M प्रकल्पते ( for 'येत् ) N ( D8 om, Ś2 K4 D8 missing ) मासे वा सम( Ś1 K0 सप्र )कल्पयत् ( Ś1 K0 Dn1 D1 4 9 'येत् ) — c) K1 'सपूर्णा — d) M2–4 पष्ठे ( for गर्भो ) Ś1 K0–2 D2 5 गर्भवासी ( Ś1 K0 'से, K2 'सि ) ( for गर्भो मासे ) Ñ1 B1 3 4 Dn2 D1 4 7 9 वै स तु; B2 वै संप्र, B3 D3 6 S ( except M1 ) मासे च, Dn1 वै सम ( for मासे प्र )

4 a) K1 2 D2 5 अमेध्यवासे, Dn1 अमध्यमध्ये — b) K5 'लेपनो, Dn1 'लेपनौ — c) K1 2 D3 5 स ( for तु ) — d) K5 ऊर्ध्वं' ( for ऊर्ध्व ) G2 'शिर T G1 ह्यूर्ध्वपादो ह्यधोमुख

5 a) K2 याति ( for योनि ) T1 मपागम्य — b) K2 Dn1 बहु, D5 वहू ( for बहून् ) Ś1 K0–3, 5 B3 D2 सम( K1 D5 'मा )र्छति, B4 स गच्छति; D5 समार्छति, M2 समुच्छति ( for समृ' ) — c) K3 5 -सपीडना; G1 -सपीडया ( for 'डनाच् ) M1 योनिं सपीडयेच्चैव — d) Ñ1 कर्म ( for पूर्व ) T G पूर्व' कर्मोपदानत, M1 3 'र्मावधानत', M2 4 'र्मविधानत

6 a) Ś1 K0–3 मुक्तश्च, K5 मुक्तस्य; G3 मुक्तस्तु K3 ससार; K6 ससारा, M3 ससारन् ( for 'राद् ) G2 तस्मान्मुक्तस्तदा राजन् — b) G2 पश्यान् ( for अन्यान् ) K3 पश्चादनुपद्रवान् (sic), K5 पश्चादुपाद्रवेत्. M2 अन्यत्पश्यत्युपद्रवात् — G1 reads 6cd twice — c) K1 2 D2 6 7 अनु, G2 अप ( for उप ) Ñ1 B1–3 Dn D1 3, 4 6 7 9 -गच्छति ( for -सर्पन्ति ) T G1 ( first time ) मृगय( T1 'या )न्पर्यटन्नित्यं — d) T G1 2 सारमेय; Cd 'या ( as in text )

ततः प्राप्तोत्तरे काले व्याधयश्चापि तं तथा ।
उपसर्पन्ति जीवन्तं बध्यमानं स्वकर्मभिः ॥ ७
बद्धमिन्द्रियपाशैस्तं सङ्गस्वादुभिरातुरम् ।
व्यसनान्युपवर्तन्ते विविधानि नराधिप ।
बध्यमानश्च तैर्भूयो नैव तृप्तिमुपैति सः ॥ ८
अयं न बुध्यते तावद्यमलोकमथागतम् ।
यमदूतैर्विकृष्यंश्च मृत्युं कालेन गच्छति ॥ ९
वाग्घीनस्य च यन्मात्रमिष्टानिष्टं कृतं मुखे ।
भूय एवात्मनात्मानं बध्यमानमुपेक्षते ॥ १०
अहो विनिकृतो लोको लोभेन च वशीकृतः । C 11 115 B 11 4 21 K 11 4 22

---

7 K₁ om 7ᵃ–8ᵈ — ᵃ) Ś₁ Ko–₃ D₂ ₄ प्राप्तान्तरे, K₄ Dn₁ D₁ ₄ ₅ प्राप्तेंतरे, B₁ प्राप्ततरे, D₆ (orig, marg by corr as in text) ₃ प्राप्तेंतरे Ñ₁ प्राप्तोत्तरे तत काले, S तत कालांतरे प्राप्ते — ᵇ) Dn₂ व्याधयस, G₁ चापि तत (for चापि तं) K₃ यथा, G₃ तदा (for तथा) Ś₁ Ko–₃ D₂ ₅ व्याधयोपि परंतप (Ś₁ K₁ ₂ °प) — K₁ ₂ D₂ om (hapl) 7ᶜ–8ᵈ — ᶜ) D₂ om from उपसर्पन्ति up to स्व (in ᵈ), reading कर्मभि- and 8ᵉᶠ after तृप्ति (in 8ᶠ), and repeats thereafter from नराधिप up to तृप्ति G₁ उपसर्पंति, G₃ तम्र°, M₂ उपसर्पंति — ᵈ) Ś₁ Ko G₁ बाध्यमानं, M₂ वध्य° (for बध्य°)

8 K₁ ₂ ₄ D₂ om 8ᵃᵇᶜᵈ (cf v 1 7) For the sequence of 8ᵃᵇ in D₂, cf v 1 7 — ᵃ) Ś₁ Ko स्थूलम्, D मितम् (for बद्धम्) D₅ तु (for त) K₂ Ñ₁ B Dn D₁ ₂ ₃ ₆ ₇ ₈ त (Dn₂ स) बद्धमिंद्रियैः पाशैः — ᵇ) B₁ सम; Dn₂ गधि; D₂ गंध, D₁ lacuna, D₆ ₇ मतं (for सङ्ग-) K₄ Ñ₁ B Dn D₁ ₃ ₅ ₆ ₇ ₈ भावृत (for आतुरम्) S मत(T₁ संग, G₂ मद्र)कामुकमातुर — Ś₁ om (hapl) 8ᶜᵈ — ᶜ) Ko [उ]पसर्पंति, K₃ B₁ ₂ ₄ Dn₁ [अ]पि वर्तते, D₁ ₄ ₅ [अ]पि व(D₆ न)र्तंते, D₆ [अ]पसर्पंति, S [अ]नुवर्तते Ñ₁ यामो नान्युपवर्तंते — For the sequence and repetition of the portion from नराधिप up to तृप्ति in D₂, cf v 1 7 — ᵉ) K₃ ₄ Dn₂ D₁ ₂ ₈ T₁ G₁ M₂ ₄ बाध्यमानश्च (M₄ °नं च); B₂ D₃ ₄ G₂ वध्यमानश्च — ᶠ) D₆ त समुपैति, T₁ तृप्तिमुपेति In Ś₁, मुपैति स is damaged — After 8, N (Ś₁ K₄ D₂ missing) ins

15* तदा न वेत्ति चैवाय प्रकुर्वन्साध्वसाधुनी ।

[ In Ś₁, तदा न वेत्ति चैवा is damaged B₁ ₂ तथा (for तदा) K₃ नवेत्ति, B₁ ₂ Dn₁ D₁ ₄ ₆ ₇ ₈ नावैति, Dn₂ D₂ नवेत्ति (for न वेत्ति) K₂ ₃ योवायत (K₃ °म), B₂ D₁ ₆ ₇ वै पाप, Dn₁ पाप म, D₈ नैवाप, D₂ नाय (sic) (for नैवाय) Ś₁ Ko–₂ B₂ ₄ Dn₂ D₁–₄ ₆ ₇ ₈ साध्वसाधु वा (K₁ °धु न, K₂ ₃ °धुनि, D₂ °धुना, D₃ °धु न, D₈ °धुवान); Cd °साधुनी (as above) ]

— K₄ Ñ₁ B D (except D₂, D₃ missing) cont, while S ins after 8 (cf v 1 10)

16* तथैव परिरक्ष्यन्ति ये व्यानपरिनिष्ठिता ।

[ Ñ₁ B₄ D₆ °रक्षति (Ñ₁ °त), B₁ ₂ Dn₁ °रक्ष्यते (Dn₁ °ति), Dn₂ वक्षति (for °रक्ष्यन्ति) S तत्रैव परिपश्य(G₂ °दृश्य)न्ति (for the prior half) K₃ यो ध्यान-; M₁ ₂ ₄ येध्यात- ]

9 ᵃ) Ś₁ Ko–₃ D₂ स्वय न, D₅ अय तु, G₂ यमयं (for अयं न) Dn₁ T₁ G₁ M₁ बध्यते (for बु°) In Ś₁ ते तावद् is damaged K₃ ₅ तात (for तावद्) — ᵇ) Ś₁ damaged K₂ लोके, T₁ -लोका, T₂ G₁ ₂ -लोकाद् (for लोकम्) K₁ अघोरवि, K₂ B₁ ययागत; K₂ ₅ अथोगत, Ñ₁ उपागत, B₄ अथा- विशन्, Dn₂ अयागमत्, D₂ अथोगति, T G₁ अ(T₁ त)यागमे, G₃ ₃ इहागमेत् (G₂ °गत) Ko यमलोक पथा गत — ᶜ) Ś₁ damaged Ko Dn₂ D–₇ विकृष्ट्य, K₃ ₅ विकृष्य तं Dn₁ D₂ विकृष्य(D₂ °ष्यं)श्च, T च कृष्यश्च, G₁ च (om कृष्यश्च); G₂ निकृ° — ᵈ) K₂ ₅ D₂ ₄ G₃ M₁ ₃ मृत्यु- (for मृत्युं) G₂ -लोकेन, M₂–₄ काले नि (for कालेन)

10 ᵃ) K₂ वाग्घिनस्य, T₁ वाग्घनस्य (for वाग्घीनस्य) Ś₁ D₂ om च Ko तु यन्मात्रम्, K₃ Ñ₁ B₁ ₄ Dn₁ D₇ च यन्मात्रा, K₄ चांसुयन्मात्रा (sic), T G₃ M च या मात्रा, G₁ damaged (for च यन्मात्रम्) G₂ मानितस्याव यो मात्रा Cd cites मात्रां — ᵇ) K₂ ₅ इष्टानिष्टकृत मुख, Ñ₁ Dn₂ D₃ ₄ ₇ (before corr) इष्टा(D₇ इष्ट)निष्टकृत मु(Dn₂ मु)खे, D₇ इष्टानिष्टं च विंदति, S इष्टानि(T₁ °न)ष्टकृ(M₁ °ग)तस्य वै — ᶜ) Ś₁ Ko मूल (for भूय) — ᵈ) G₁ ₂ बुध्य° (for बध्य°) K₂ B₁ उपेक्ष्यते; S उपैति स — After 10, K₃ reads 13ᶜᵈ and 14ᶜᵈᵉᶠ, repeating 13ᶜᵈ and 14ᵉᶠ in their proper places T G repeat after 10, 16* (cf v 1 8)

11 ᵃ) K₁ ₂ D₂ विनिकृतो, K₄ विनिकृते, Ñ₁ धिग्धिकृतो K₁ ₂ ₃ D₂ लोके (for लोको) — ᵇ) D₃ लोको न (for लोभेन) — ᶜ) Ś₁ Ko–₂ ₃ D₂ क्रोधमोह,

लोभक्रोधमदोन्मत्तो नात्मानमवबुध्यते ॥ ११
कुलीनत्वेन रमते दुष्कुलीनान्विकुत्सयन् ।
धनदर्पेण दृप्तश्च दरिद्रान्परिकुत्सयन् ॥ १२
मूर्खानिति परानाह नात्मानं समवेक्षते ।
शिक्षां क्षिपति चान्येषां नात्मानं शास्तुमिच्छति ॥१३
अध्रुवे जीवलोकेऽस्मिन्यो धर्ममनुपालयन् ।
जन्मप्रभृति वर्तेत प्राप्नुयात्परमां गतिम् ॥ १४
एवं सर्वं विदित्वा वै यस्तत्त्वमनुवर्तते ।
स प्रमोक्षाय लभते पन्थानं मनुजाधिप ॥ १५

इति श्रीमहाभारते स्त्रीपर्वणि चतुर्थोऽध्यायः ॥ ४ ॥

---

$B_4$ मोहक्रोध, $D_5$ लोभमोह (for लोभक्रोध) $K_3$ $B_{2\,3}$ $Dn_2$ $D_{3\,4\,9}$ भयोन्मत्तो, $B_1$ मदोन्मत्ता; $Dn_1$ भयान्मुक्तो, $D_{1\,6\,7}$ -भयान्मत्तो

12 [a]) $\tilde{N}_1$ $B_{2-4}$ $Dn_2$ $D_{3-5\,9}$ S (except $M_{2\,4}$) कुलीनत्वे च $Dn_1$ रजते (for रमते) —[b]) Some MSS दुःकुलीनान् $M_3$ च (for वि) $Ś_1$ $K_0$ निष्कुलीनान्निषेवते, $K_1$ $D_{2\,5}$ दौःकु($D_5$ दौष्कु)लेयान्निषेध($D_2$ °सेव)ते, $K_2$ दौ कुलेयानिवेषसे, $K_5$ दौःकुलाना निपेविते, $G_3$ दुष्कुले नानुकुत्सयन् — $G_3$ om (hapl) 12[cd] —[c]) $Ś_1$ $K_{0-2\,5}$ $D_{2\,5}$ -मानेन, $K_3$ -दर्पेन (for -दर्पेण) $Ś_1$ $K_0$ मत्तश्च, $K_1$ $D_2$ तृप्तश्च (for दृ°) M तथैव धनदृप्त($M_3$ °तृप्त, $M_4$ °तृप्ता)श्च —[d]) $K_5$ दरिद्रा, S ($G_3$ om) दारिद्र्य ($T_1$ $G_2$ °द्र) $K_{1\,2}$ $D_5$ परिगर्हयन् ($K_2$ °येन्, $D_5$ °यत्), $T_2$ °कृत्सयन्; M °कुत्सयेत्

13 [a]) $Ś_1$ मूर्खा इव, $K_0$ मूर्खानिव, $K_{1\,5}$ $D_3$ मूर्पा($D_3$ °र्णा)निति; $Dn_2$ मूर्खा इति, $D_2$ मर्षानिति; $G_1$ मूर्खा नीति, $G_2$ मूर्खो नीति $D_1$ आहुर् (for आह) $K_2$ मूर्पानि पितरानाहुर् (sic) —[b]) $K_{1\,5}$ $B_4$ $D_7$ समवेक्ष्यते, T $G_1$ समुपेक्षते, $G_3$ समयेक्षते — $K_3$ reads 13[cd] (for the first time) after 10 (cf v l 10) —[c]) $K_3$ (second time) $\tilde{N}_1$ $B_{1-3}$ Dn $D_{1\,3\,4\,6\,7\,9}$ दोषान्, $D_5$ शिष्यान्; $G_2$ M वीक्षां (for शिक्षां) $Ś_1$ $K_{0\,3}$ (first time) $_5$ क्षपति (for क्षि°) $Dn_1$ वा (for च) —[d]) $B_1$ $Dn_1$ $G_1$ om न $K_1$ शास्त्रम् (for शास्तुम्) T $G_1$ अर्हति (for इच्छति) — $\tilde{N}_1$ B Dn $D_{1\,3-7}$ S ins after 13 $K_3$, after the second occurrence of 13[cd]

17* यदा प्राज्ञाश्च मूढाश्च धनवन्तोऽथ निर्धना ।
कुलीनाश्चाकुलीनाश्च मानिनोऽथाप्यमानिनः ।
सर्वे पितृवनं प्राप्ताः स्वपन्ति विगतत्वचः ।
निर्मांसैरस्थिभूयिष्ठैर्गात्रैः स्नायुनिबन्धनैः ।
किं विशेषं प्रपश्यन्ति तत्र तेषां परे जनाः । [5]
येन प्रत्यवगच्छेयुः कुलरूपविशेषणम् ।
यदा सर्वे समं न्यस्ताः स्वपन्ति धरणीतले ।
कस्मादन्योन्यमिच्छन्ति प्रलब्धुमिह दुर्बुधाः ।
प्रत्यक्षं च परोक्षं च यो निशम्य श्रुतिं त्विमाम् ।

[ $K_3$ om (hapl.) lines 1–6 — (L 1) $T_1$ $G_2$ यथा, $T_2$ एव, $M_1$ तदा (for यदा) $\tilde{N}_1$ B Dn $D_{1\,3-7\,9}$ मूर्खाश्च (for मूढाश्च) $B_{2\,4}$ $Dn_1$ $D_{1\,4\,6\,7\,9}$ धनवतश्च, $G_2$ °वतोपि — (L 2) $Dn_1$ कुलीनश्च (for °नाश्च) $\tilde{N}_1$ $G_1$ $M_2$ वाप्य-, $Dn_2$ $D_{3\,6}$ [अ]प्यव-, $D_9$ येप्य- (for ऽथाप्य-) T [अ]मानिनोप्यथ मा°, $G_3$ मानितोथाप्यमानिताः (for the post. half) — (L 3) $\tilde{N}_1$ $B_{1.2}$ पितृवशं, $D_5$ °धनं $\tilde{N}_1$ $B_4$ $Dn_1$ $D_{1\,4\,9}$ विगतज्वराः, $M_3$ विहतत्वचः. — (L 4) $G_2$ न मांसैर् (for निर्मांसैर्) $G_3$ आंत्रैश् (for गात्रैः) T G च स्नायु- (for स्नायुनि-) $Dn_2$ निबधिभिः — (L 5) $B_1$ $Dn_1$ कं विशेष, $B_2$ $D_{1\,4\,9}$ विशेषं न $M_4$ तु तत्रैषां (for तत्र तेषां) — (L 6) S च प्रति (for प्रत्यव-) $G_2$ -गच्छेय (for °युः) $B_1$ कुलवत्परिशेषण (for the post half) — (L 7) $G_2$ यथा (for यदा). $D_3$ $M_4$ सर्वैं (for सर्वे) $Dn_1$ समम्यस्ताः, $D_{1\,4}$ $T_2$ $G_3$ $M_3$ समन्यस्ताः, $D_3$ समत्यक्ता $M_2$ यदा सर्वसमन्यस्ताः $D_4$ स्वपते (for स्वपन्ति) — (L 8) $Dn_2$ $D_{1\,3\,5}$ T G तस्माद् (for क°) $Dn_1$ प्रक्षुब्धाम् (sic), $D_4$ प्रलुब्धम् (for प्रलब्धुम्) $Dn_2$ दुर्धिय (for दुर्बुधा) S विप्रलब्धुमिहा($T_1$ °लुब्धामुहा, $T_2$ °लब्धामहा, $G_1$ °लुब्धा महा, $G_2$ °लब्धमिवा, $G_3$ °लुब्धमिवा, $M_1$ °लुब्धमिहा)बुधा (for the post half — (L 9) $M_2$ om (hapl) परोक्षं च $D_{6\,7}$ न सम्यक्, T $G_1$ निशाम्य $D_7$ विलुपति (*see m as above*), T G $M_3$ श्रुती($T_2$ °ति)मिमा, $M_{1\,2\,4}$ श्रुतीरिमा ]

14 $\tilde{N}_1$ $B_3$ $D_9$ S om 14[ab] $K_3$ reads 14[ab] after the first occurrence of 13[cd] (cf v l. 10) —[b]) $Ś_1$ $K_{0\,3}$ $Dn_2$ $D_{1\,3\,6}$ अनुपालयेत्; $Dn_1$ परिपालयेत् — For the first occurrence of 14[cd] in $K_3$, cf v l.

# ५

धृतराष्ट्र उवाच ।
यदिदं धर्मगहनं बुद्ध्या समनुगम्यते ।
एतद्विस्तरशः सर्वं बुद्धिमार्गं प्रशंस मे ॥ १
विदुर उवाच ।
अत्र ते वर्तयिष्यामि नमस्कृत्वा स्वयंभुवे ।
यथा संसारगहनं वदन्ति परमर्षयः ॥ २
कश्चिन्महति संसारे वर्तमानो द्विजः किल ।
वनं दुर्गमनुप्राप्तो महत्क्रव्यादसंकुलम् ॥ ३
सिंहव्याघ्रगजाकारैरतिघोरैर्महाशनैः ।
समन्तात्संपरिक्षिप्तं मृत्योरपि भयप्रदम् ॥ ४
तदस्य दृष्ट्वा हृदयमुद्वेगमगमत्परम् ।
अभ्युच्छ्रयश्च रोम्णां वै विक्रियाश्च परंतप ॥ ५ C 11 129 B 11 5 6 K 11 5 6

---

10 — c) G2 3 वर्तेन (for वर्तेत) — d) Ś1 K0–2 D2 स पर [ (for परमां)

15 a) D2 om सर्वं Ñ1 B1 2 तु (for चै) — b) B1 स्वेवम्, D6 तु त्वम् (for तत्वम्) Ñ1 यथा त्वमनुवर्तसे — c) D4 सह (hypermetric) (for स) K1 प्रमोक्षय (sic), B4 वै मोक्षाय (for प्रमो°) K0 स प्रसक्तोक्षाय लभते (sic), B3 Dn D1. 2 4 6 7 8 M स प्र( Dn1 om प्र)मोक्ष( M1 द )यते सर्वान्( M1 3. 4 °र्वं, M2 °र्व-), T G1 स वै मोक्षायते चैव, G2 3 स वै मोक्षयते चैमं — d) B3 Dn2 D4 9 पयानो, D3 सयानो, T G1 मनुजो (for पन्यान) K1 2 5 मनु जाधिप, Dn1 D1 4 6 7 9 मनुजेश्वर (D6 7 °र), G2. 3 वसुधाधिप

Colophon — *Sub-parvan* Ś1 K0 2 3 5 Ñ1 B Dn1 D1. 2 4 6 7 9 विशोक — *Adhy name* Ś1 K0 D3 विदुरवाक्य; K1. 2 D2 5 ससारवर्णन, B1. 2 ससार चक्र, G3 शारीरकथन, M शरीरानित्यकथन — *Adhy no* (figures, words or both) K1 2 Ñ1 Dn2 D3 6 7 8 T1 G M 4 (as in text), B1 90 (?), T2 (wrongly) 3 — *Śloka no* D2 12

## 5

☞ This adhy is missing in Ś2 K3 D5 (cf v 1 11 1 1 and 15)

1 B1 om. the ref — a) G2 इम (for इद) — b) D1 बुध्य (marg sec m बुध्या) Ś1 K0 °वर्तते, Dn2 T G1 °बुध्यते (for °गम्यते) — c) Dn1 D6 7 तद्दृ, D1 2 4 9 तद्दि (for एतद्) K1–3 5 Dn1 D1 2 3 6 7 8 S विस्तरत — d) Ś1 K0–3. 5 B1 प्रचक्ष्व (K2 3 °क्ष्य) मे, Dn2 प्रशससि

2 a) Dn2 मार्तं, T G1 तत्र (for अत्र) Dn2 स- (for ते) Ś1 K0 M1 वर्ण°, D3 कर्त° (for वर्त°) — b) K0–3 5 Dn D2 8 नमस्कृत्य — c) Dn2 D3 गहने (for °न) — d) Ś1 K0–3 5 D2 5 वदति (for वदन्ति) G3 प्रवदति मनीषिण (also परमर्षय as in text)

3 a) D5, Bom. Ed कातारे (for ससारे) — b) K1 वर्तमाने — cd) D4 9 transp वन and महत् G3 वन (for वन) K2 D4 मह (sic), Dn1 बहु, Dn2 D1 3 6 7 महा (for महत्)

4 a) K0 सिंहव्याघ्र Ś1 K0 3. 4 D2 4 °गजर्क्षै( K5 °र्क्षो )घैर्, K1 °गजर्क्षौघैर्, K2 गजैर्घोरैर् (for °गजाकारैर्) — b) K2 घोररूपैर्, B2–4 Dn D1 3 4 6 7 8 अतिघोर (for °घोरैर्) K1 महाशनि, K2 3 5 Ñ1 B Dn D1 3 4 6 7 9 °स्वनै, T °वनै, G1 °वने, G2 °नने, G3 °नसै (for °शनै) — After 4ab, K1. 2 D1 3 ins

18* पिशितादैरतिभयैर्महोग्राकृतिभिस्तथा ।

— c) D1 स (fo स) D4 क्षित (for °क्षिप्त) — d) K5 मृत्योरिव, T G1 यस्माद्दृष्टु, G2 यस्तु दृष्ट्वा, G3 यस्मिन्दृष्ट्वा, M1 lacuna after य, M2 4 यस्मिन्दृष्टे, M3 यत्स्म दृष्ट्वा (for मृत्योरपि) K1 2 D2 भयकर; K3 भयप्रम, S महद्भय (for भयप्रदम्) Ñ1 B (except B1) Dn1 D1 4 6 7 9 यस्स (Ñ1 य स) दृष्ट्वा ग्रसेयम° (Ñ1 B1 2 °जन, Dn1 °दसु°)

5 a) Ś1 K0–2 D2 4 ततस्य, Dn1 दृतस्य; G3 ततोस्य (for तदस्य) D6 तस्य दृष्ट्वा च हृदयम् — c) Ñ1 M अभ्युच्छ्रय च, Dn2 D3 अस्युच्छ्रयश्च, T1 G2 अभ्युच्छ्रयत, T2 G1 °च्छ्रयति, G3 °च्छ्रय तु (for °च्छ्रयश्च) T G1. 2 रोमाणि, G3 M1 रोमाणा; M3 4 रोम्णा स (for रोम्णां वै) — d) T1 विक्रयश्च, M2 4 विक्रियां च G2 इद्रियाश्च परतप — Ś1 K0–2 5 B1

स तद्वनं व्यनुसरन्विप्रधावन्नितस्ततः ।
वीक्षमाणो दिशः सर्वाः शरणं क्व भवेदिति ॥ ६
स तेषां छिद्रमन्विच्छन्प्रद्रुतो भयपीडितः ।
न च निर्याति वै दूरं न च तैर्विप्रयुज्यते ॥ ७
अथापश्यद्वनं घोरं समन्ताद्वागुरावृतम् ।
बाहुभ्यां संपरिष्वक्तं स्त्रिया परमघोरया ॥ ८
पञ्चशीर्षधरैर्नागैः शैलैरिव समुन्नतैः ।
नभःस्पृशैर्महावृक्षैः परिक्षिप्तं महावनम् ॥ ९
वनमध्ये च तत्राभूदुदपानः समावृतः ।
वल्लीभिस्तृणछन्नाभिर्गूढाभिरभिसंवृतः ॥ १०
पपात स द्विजस्तत्र निगूढे सलिलाशये ।
विलग्नश्चाभवत्तस्मिँल्लतासंतानसंकटे ॥ ११
पनसस्य यथा जातं वृन्तबद्धं महाफलम् ।
स तथा लम्बते तत्र ऊर्ध्वपादो ह्यधःशिराः ॥ १२

---

D2 5 subst for 5cd  D6 (before corr) 7 ins after 5cd

19* वेपथुश्चाभवद्गात्रे रोमहर्षश्च भारत ।

[D5 रोमहर्षश्च राजेंद्र (for the prior half)  Ś1 K0 लोम (for रोम-)  K1 2 व्यजायते (K2 °त) (for च भारत)  D6 वेपथुश्चाप्यजायत (for the post half) ]

6 K1 2 D2 om (hapl) 6 — a) G2 तद्वने (for °न)  Ś1 K0 3 5 व्यनुसृतो,  B1 व्यन्ववसत्,  Dn1 अनुसरन्;  Dn2 ह्यनंसरन्;  D5 व्यनुचन् (sic),  T1 व्यतिरस;  T2 व्यविसर,  G1 व्यतिसरन्,  G2 चानुचरन्,  G3 व्यनुचरन्,  M1 ह्यनुसरन्,  M2-4 व्यनुसरद् (for व्यनुसरन्) — b) K1 2 Ñ1 B D (Dn D1-4 6 7 9 missing) संप्र,  K3 5 ह्यभि;  T G1 नृप;  G3 विप्रो (for विप्र)  D5 द्रुतश्चेतश्च भारत — c) K3 5 B1 Dn2 D1 3-7 9 वीक्ष्यमाणो — d) K3 कारणं (for शरणं)  G2 3 इह (for इति)

7 a) G2 सदैषां (for स तेषां)  T1 वाचम्;  T2 नाशम् (for छिद्रम्)  Dn2 अन्विष्यन् (for °च्छन्) — b) M2 -विद्रुत (for पीडित) — c) D2 नव (for न च)  K3 5 दूरे (for दूरं) — d) D4 9 वा (for च)  B1 °मोक्ष्यते;  B3 Dn1 D1 4 6 7 9 °मोच्यते (for °युज्यते)  K5 न भावबैर्विप्रयुज्यते (sic)

8 a) K1 2 मूढं,  K3 5 D2 5 S गूढ (for घोर) — b) G2 3 वानरावृत  M2 समद्वादुराकृत (sic)  Cd cites वागुरा — M1 om (hapl) 8c–10b — c) Ś1 सं****,  Ñ1 B1-3 Dn D1 3 4 6 7 9 T1 G2 सपरिक्षिप्त (Dn1 °स),  G1 °व्यक्त  B4 समतात्परियुक्त हि

9 M1 om 9 (cf v l 8) — b) G2 शरैर् (for शैलैर्)  B4 समुन्नतौ,  G3 समन्वितै,  M2-4 समुच्छ्रितै — c) Ś1 **स्पृशिभिर्;  K0-2 D2 5 नभस्पृग्भिर्,  B4 नभस्पृद्भिर्,  G3 नभस्पृशैर्,  M2 नभस्पर्शैर्  B3 -वेगै;  Dn1 D1 4 6 7 9 -घोरै (for वृक्षै) — d) K3 5 Dn2 D8 परिक्षिप्तै,  D4 परिव्याप्त (for °क्षिप्त)  Ś1 K0-3 5 B1 D2 5 समतत;  Dn1 महाबलै (for °वनम्)

10 M1 om 10ab (cf v l 8) — b) K1-3, 5 D2 5 G3 M3 उदपान  Ś1 K0-3 5 B1 D2 5 तमोवृत (Ś1 K0 B1 °त);  G2 3 समंतत,  M2 समावृतं (for समावृत) — c) K2 3 वल्लिभिस् Ś1 K0 2 3 5 D2 5 तृणसंघातैर्;  K1 तृणसघातैर् (sic),  S तृणनद्धा(G2 °वर्धा)भिर् (for °छन्नाभिर्) — d) Ñ1 B Dn D1, 4 6 7 9 T1 G M1 दृढाभिर्;  D8 lacuna (for गूढाभिर्)  Dn1 इति,  D4 9 अति (for अभि-)  K1, 2 D2 5 T1 G2 M2 संवृत  K3 5 गूढैरिव (K5 °रपि) समावृत

11 b) D2 निगूढ,  T1 G M1 3 विगूढे  B1 सलिलालये.  D5 निगूढसनिलाशये (corrupt) — c) Dn1 निमग्नश्;  D1 6 7 विमग्नश् (for विल°)  B1 च भवद्,  D2 चांतर (sic),  D9 चाभव (for चाभवद्)  Dn2 D5 M3 तत्र (for तस्मिन्) — d) K1 संकरे;  Ñ1 B D (except D2 5,  D8 missing) T G1 3 M3 4 सकुले (for संकटे)

12 a) G2 3 तथा (for यथा)  B1 यात,  D1 6 7 9 जाल (for जात) — b) K0 2 D4 वृत्तबद्धं;  K1 द्वार°;  K3, 5 वृत्त(K5 om त)वत,  Ñ1 M1 वृत्तवृद्ध,  B1 °बर्गे;  Dn2 D8 °पक्वं,  D5 श्रुत पक्व,  T2 वृंते बद्ध (for वृन्तबद्ध)  Ś1 K0 सवरफलं;  K2 Ñ1 D2 5 M2-4 महत्फल,  D9 T1 महाबल — c) B4 Dn2 तस्मिन्,  D9 om (for तत्र)  Ś1 K0 D5 लंबते स तथा ह्य(D5 °द्य त)स्मिन्;  K1 3 D2 ललंबे स तदा (K3 °था) तस्मिन्,  K2 5 लवमानस्त(K5 ललवेत त)था तस्मिन् — d) K1 ऊर्द्धपाद,  K2 उर्ध्वपादो,  Ñ1 B1 2 वृत्तबधो (Ñ1 °वंता;  B1 °वद्धो),  B3 D1 3 4 6 7 9 G ह्यूर्ध्वपादो;  T2 मौर्ध्वे°,  M3 ऊर्ध्वपादौ  K1 ह्यधै शिरा;  D8 G2 ह्यध शिर — After 12, T2 ins 20* (cf v l 13)

13 a) K1 तथापि,  T2 G2 3 M तत्रैव (for

